असंहार्योत्साहमिति ॥ तरसा बलेन वेगेन च जयिनं जयशीलमुदयमस्त्रलाभरूपमभ्युदयम्। अन्यत्र उदयाद्रिं च। प्राप्यासंहार्योत्साहं संहर्तुमशक्योत्साहं जगतोऽनवसादाय क्षेमाय गुर्वीं धुरं दुष्टनिग्रहम्। तमोपसंहाररूपं च भारम्। वोढुं स्थितम्। स्वधाम्ना स्वतेजसा लोकानामुपरि कृतस्थानं कृतास्थिति कृतपदम्। अन्यत्रोपरिवर्तमानम्। तपोलक्ष्म्या दीप्तं तं पाण्डवम्। अमरा इन्द्रादयो दिनकृतं सूर्यमिव। उपरूपजगुः साधु महाभाग्योऽसीति तुष्टुवुः ॥ शिखरिणीवृत्तम् ॥

व्रज जय रिपुलोकं पादपद्मानतः स-
ङ्गदित[1] इति शिवेन[2] श्लाघितो देवसंघैः।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम ॥ ४८ ॥

व्रजेति ॥ शिवेन व्रज स्वपुरं गच्छारिलोकं जयेति गदित उक्तः। यतः पादपद्मानतः शिवपादपङ्कजानतः संस्तथा देवसंघैः श्लाघितः स्तुतोऽत एव धृता गुर्वी जयलक्ष्मीर्येन स पाण्डुपुत्रोऽर्जुनो निजगृहं स्वाश्रमं गत्वा प्राप्याथ सादरं यथा तथा धर्मसूनुं राजानं ननाम नमनं चकार ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया घण्टापथसमाख्यया व्याख्यया समेतः कविश्रीभारविकृतौ किरातार्जुनीये महाकाव्ये धनंजयास्त्रलाभो नामाष्टादशः सर्गः।

---

समाप्तमिदं किरातार्जुनीयं नाम महाकाव्यम्।

---

१ उदित. २ भवेन.

# अथ किरातार्जुनीयटीकाप्रमापकाः



१ अमरकोशः ।
२ अलंकारसर्वस्वम् ।
३ कामन्दकः ।
४ काव्यप्रकाशः ।
५ काशिका ।
६ केशवकोशः ।
७ कैयटः ।
८ क्षीरस्वामी ।
९ दण्डी ।
१० नीतिवाक्यामृतम् ।
११ न्यासोद्द्योतः ।
१२ पाणिनिः ।
१३ भाष्यकारः ।
१४ मनुः ।
१५ मार्तण्डकोशः ।
१६ यादवकोशः ।
१७ वामनः ।
१८ वार्तिकम् ।
१९ विश्वप्रकाशकोशः ।
२० वृत्तरत्नाकरः ।
२१ वैजयन्तीकोशः ।
२२ शब्दार्णवकोशः ।
२३ शाकटायनः ।
२४ शाश्वतकोशः ।
२५ सज्जनः ।
२६ हलायुधकोशः ।
२७ हेमचन्द्रकोशः ।



# अथ किरातार्जुनीयस्य सूचीपत्रम् ।